दूरध्वनिसंकेतः –" संस्कृतम् "

वाणीं भजत गैर्वाणीम्

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र.) भारतम्.


संपुटः ११ | 15 JANUARY 1973 | क्रमांकः १





परीधावि-पुष्यांकः

शकाब्दाः १८९४

मूल्यम् ०–४० पैसाः

# विषयसूचिका







# अहो आन्ध्रदेशस्य दुस्थितिः!

सैमनव्यतिरेकात् गंजामादिकं प्रभ्रष्टम्,
सामरस्याभावात् मद्रासोपि नष्टः ।।

मद्रासलाभलोभात् महान् प्रदेशो विसृष्टः,
मतीनां दौर्बल्यात् बल्लार्यादि निरस्तम् ।।

रायलसीमतृप्त्यर्थं राजधानी कर्नूलिता,
तीरवासिशान्त्यर्थं स्थापितो गुंटूरे हैकोर्टः ।।

विशालांध्रस्थापनधिया विधावितं भाग्यनगरम्,
गृहभूकृषिवाणिज्यादिभिः परिकर्मितस्सप्रदेशः ।।

मुल्कीशल्यकारणात् मानप्राणधनैर्भग्नम्,
कथंकथमपि पुनरुज्जीवितं जनैः कंचित्कालम् ।।

महोन्नतन्यायालयप्रहारमूर्च्छिता चांध्रभूमिः,
यमौ प्रसवितुं वेदनां असह्यां अनुभवति आक्रोशति च ।।

पुनश्च राजधानी क्व भवेत् ? पुनश्च हैकोर्टः क्व वा ?
दैवमेव जानीते भावि परिणमेत् कथं वा ? ।।

"घट्टकृत्यां प्रभातं" "द्राविडप्राणायामस्समजनि"
इतःपरं वा भगवान् शुभं करोत्वांध्रेभ्य एभ्यः ।।



# सम्पादकीयम्

## प्रजाप्रभुत्वपरिणामाः परिचिन्तनीयाः

प्रजाप्रभुत्वस्थापनाय पूर्वैः महान् त्यागः कृतः । आंग्ला निर्वासिताः संस्थानानि च समूलमुन्मूलितानि । प्रजानां वयस्कानां सम्मतिप्रदानाधिकारः प्रदत्तः, तेषामेव पालनयंत्रांगे सभ्यता नायकता अमात्यता च कल्पिता । प्रजाः प्रबोधिताः– अद्य वयमेव प्रभवः वयमेव भारतभाग्यविधातारः वयमेव सर्वव्यवहारदक्षा इति । चतुर्विधस्वातंत्र्यं प्रत्यायितं, पञ्चशीलानि प्रकटितानि, षाड्गुण्यं अवलंबितं, सप्तांगानि द्रढीकृतानि, अष्टैश्वर्याणि अभिप्रेतानि, नवनवानि संविधानानि संपादितानि । मते ध्वज उच्छ्रितः, कुले खड्ग उल्लासितः, धनिषु उग्रा दरिद्रेषु च आर्द्रा च दृष्टिः प्रसृता । परिश्रमेषु आदरः, पारिश्रामिकेषु अनादरः, कर्मकरेषु आत्मीयता, कर्महीनेषु च वात्सल्यं आसंजितानि । कृषिर्वर्धिता कर्षकाः पोषिताः, सस्यं संरक्षितं, सहैव मूल्यानि प्रवर्धितानि । एवं स्वातंत्र्यप्राप्तिसमनन्तरे काले बहवः परिणामाः समभवन् ।

परन्तु दुष्परिणामा बहवोऽनुभूयन्ते । दैवभक्तिर्मूलतो विनष्टा, तन्मूलं च धर्माधर्मविषयविवेकः समुन्मूलितः । सत्यमहिंसा इत्यादयः महागुणाः कुत्रापि विलीनाः । "येन केनाप्युपायेन प्रसिद्धः पुरुषो भवेत्, ऋणं कृत्वा घृतं पिबेत्, सर्वे गुणाः कांचनमाश्रयन्ति" इत्यादिवच-

नान्येवाद्य प्रधानानि समभवन्। द्वारपालप्रभृति न्यायपाल-प्रजा-पाल-पर्यन्तैः उत्कोचरसः आस्वाद्यते। सम्मतिश्च बहुलजनैः रूप्यकैर्विक्रीयते। आत्मसम्मतेषु च नायकेषु पदवीमास्थाय अपकुर्वत्सु भृशं खिद्यन्ति। सम्मतिदातॄणां, मन्त्रिपदादिषु प्रमाणकारयितॄणां, न्यायालयेषु प्रांड्विवाकस्य च पुरतः प्रमाणपुरस्सरं प्रतिज्ञातं जललिपिर्भवति। आत्मलाभानुणं पक्षः पक्षौ पक्षा वा परिवर्तन्ते नायकैः। एतादृशैः वृद्धसरटैः प्रजाः विभ्रान्ताः संभ्रान्ताश्च दिड्मूढा वर्तन्ते। कार्मिककलहाः अभिवर्द्धन्ते, ते च नायकैः सर्वकारेण च परिपोष्यन्ते। वस्तूत्पत्तिं क्षीणां विमृशन्ति ते एव प्रोत्साहकाः। विद्यार्थिनःअविनीतान्आचरन्ति नायकाः उपाध्याया वा। प्रत्युद्यमं च छात्रानेव पुरस्कुर्वन्ति ते शिखंडिवत्। फलतः अबोधाविद्यार्थिनस्ते इतो भ्रष्टास्ततोपि भ्रष्टाः विचरन्ति। पदे पदे विद्याप्रणालीं परिवर्तयन्ति तन्निपुणाः। तत्फलं च विद्यार्थिष्वेव पतति। इदानीन्तना विद्यार्थिनः प्रायस्सर्वेपि बन्ध हरताल विध्वंसन विहिंसनाभिरुचयः विद्यालयविद्याप्रदविद्वेषिणः कुमार्गेण परीक्षा उत्तरितुं यतन्ते, वैफल्ये च अकार्याण्याचरन्ति। कर्मकराश्च एवमेव पदे पदे बन्धशीलाः उपवसिता अपि निष्कर्माणः वेतनाभिवृद्धिमात्रं चिन्तयन्ति, न तु स्वाश्रितसंस्थायाः जीवनम्। व्यापारसंस्थाश्च करवञ्चनाय बहुविधं यतन्ते। उद्योगिनश्च उत्कोचतत्पराः कार्याणि विलम्बयन्ति,अन्यथयन्तिवा। विद्यावन्तश्च अधिकद्रव्यसंपादनेच्छया उत्कोचलाभयोग्यां पदवीं कामयन्ते। किंकरप्रभृति शंकरपर्यन्तं उद्योगसंपादनाय मन्त्रिणां तंत्रिणां च पुरुषकारः पुरस्क्रियते। कलाशालाविद्यार्थिनामपि स्वपरप्रवेशविषये अभियोगाः न्यायालयमापूरयन्ति।

किं कारणकमप्यस्तु संघटनं तस्य राजकीयतावर्णोऽनुलिप्यते, केन वापि भवेत् किमपि, । ।

कारणत्वेन वर्ण्यन्ते, कीदृशं वास्तु कार्यं मततत्त्वफलितत्वेन प्रकाश्यते, क्वापि वास्तु दुर्घटना अपराधिषु सवर्णजनकृतं प्रख्याप्यते । न मूलवेदनकुतूहलं सर्वकारस्य, न वा नायकानां । "वृषभः प्रासूत" इत्युक्ते "वत्सं गोष्टे बधान" इत्येव आदेशाः वर्तन्ते ।

समुत्पाद्यमानानां धान्यानां वस्तूनां वा खण्डान्तरप्रेषणसौविध्यंमृबयते केवलं, भारतीयानामावश्यकतापरिज्ञानकुतू - हलं, तद्विभजनसन्नाहो वा मृग्यमेव वर्तते । रामराज्यमकांक्षितवन्तो जनाः इदानीं स्वगतं किं च्चिन्तयन्तीति न ह्यविदितम् । कृषिर्वर्धिता, अथापि सहैव सामान्यजनानां क्षुदपि । आयस्य व्ययस्य च महदन्तरं अनुभूयतेऽद्य । मूल्यानां प्रतिपदप्रवर्धनात् वस्तूनां च आवश्यकानां अलाभात् सर्वेपि जनाः धनिकाः निर्धनाश्च एकविधमेव दुःखं अनुभवन्ति । सम्पत्तिनियमनहेतोः मेधाविनोपि तटस्थाः कालं यापयन्ति । एवं स्थिते स्वातंत्र्यफलं किं वेति विचारयन्ति सहृदयाः ।

सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखमाप्नुयात् !

## मुल्कीनियम - शासनम्

नवदेहली, १९ दिसम्बरः (दशमवारः)

लोकसभायां भारतसर्वकारेण प्रतिपादितं मुल्की - नियमप्ररूपं (पुर्वरूपं प्रस्तावस्य) एवमस्ति ।

१. इदं शासनं "मुल्कीनियमशासनं - १९७२" इति व्यवह्रियेत ।

२. अस्मिन् शासने (यथासन्दर्भं यावत्सम्भवं असति बाधके) यावत् विवरणम् नापेक्ष्यते –

(क) "नियुक्तिदिनं" इत्यस्य १९५६ नवम्बर (नवमवारः) १ दिनांक इत्यर्थः ।

(ख) "नियुक्तिः", इत्यत्र शाश्वतानां (पर्मनेण्ट्), कतिपयकालवर्तितां अथवा तात्कालिकस्थानानां (टेम्परररी) औद्योगिकपदानां अन्तर्भावः कृतः । परन्तु नैमित्तिक (क्याजुवल्) पदानां नान्तर्भावः कृतः ।

(ग) "राजधानीप्रान्तः" नाम हैदराबादनगरपालिका (मुनिसिपल् कार्पोरेषन्) शासनानुसारेण हैदराबाद - सिकिन्दराबाद नगरप्रान्तः ।

(घ) प्रथमनिर्दिष्ट (षेड्यूल्) पदवी नाम प्रथमपट्टीनिर्दिष्ट पदवी भवति । किन्तु अत्र (१) द्वितीयनिर्दिष्टपट्टिका गता या काचित् पदवी (२) हैदराबादनगर-रक्षक-भट (पोलीस्) शासनस्य (१३४८ फसली) तृतीयभागे द्वितीयानुबन्धानुसारेण विवरणप्राप्ता रक्षकभटाधिकारिपदवी न काचिदपि अन्तर्भाविता ।

(ङ) हैदराबाद् सिविल् सर्वीस् - नियमाः नाम आंग्लभाषायां उर्दूभाषायां च "जाबिता मुलाजिमत् सिविल् सरकारे आली" इत्येतदनुसारेण हैदराबाद - भूतपूर्व - संस्थानाधीशेन १३३७ हिजारायां आज्ञापिताः, १३२९ फसली वत्सरे अजुर् ७ म दिनाङ्के "जरीदा - ए - आलमिया" यां प्रकाशिता ।

(च) मुल्कीनियमाः हैदराबाद सिविल् सर्वीस् नियमसंबन्धिनो भवन्ति । भारतीय - संविधानगत - पञ्चत्रिंश (३५) अधिकरणीय, बि - अनुबन्धानुरोधेन ११५० जनवरी २६ तमदिनाङ्कात् एतेषां अनुवर्तनं भवति ।

(छ) N G O पदवीनाम आन्ध्रप्रदेश - राज्य - सर्वकार "गेजेट् सूचित" गेजिटेड् पदवी भिन्ना ।

(ज) "वेतनं" नाम मूलवेतनम् (पदवी या काचिद्भवतु, वेतनेन नियुक्तेन अनुमतेन भाव्यम्), विविधा भृतयः (अलवेन्स्) नान्तर्गताः ।

(झ) "षेड्यूल् - पदवी" नाम प्रथम-द्वितीय पट्टिकनिर्दिष्टपदवी ।

(ञ) द्वितीय - षेड्यूल्पदवी नाम द्वितीयपट्टिकायां विशिष्य निर्दिष्टा ।

(ट) राज्यसर्वकारो नाम आन्ध्रप्रदेश - राज्यसर्वकारः ।

(ठ) उन्नतपदवी (सुपीरियर् सर्वीस्), निम्न-पदवीनाम (इन्फीरियर् सर्वीस्) हैदराबादसिविल्सर्वीस् नियमानुरोधेन भवति ।

(ड) तेलंगाणाप्रान्तो नाम राज्यपुनर्निर्माण - शासनस्य (१९५६) तृतीयभागे प्रथमानुबन्धे उल्लिखिताः भूभागाः ।

(ढ) द्वितीय परिशिष्ट - पदवीविषये "तेलङ्गाणा - रिक्तस्थानं" नाम एकवर्गीयाणां साक्षान्नियोगेन पूरणीयानां प्रतित्रिक-रिक्तस्थानानां "द्वितीय" मिति अर्थः ।

३. (१) मुल्कीनियमाः अस्मिन् शासने द्वितीयानुबन्धोल्लिखित-पदवीनियोगविषय एव (२ सब् सेक्षन्) अधिक्रियन्ते ।

(२) शासने (१ सब् सेक्षन्) प्रथमानुबन्धोल्लिखित नियोगाः निम्नलिखितरीत्या वर्तन्ते –

(क) तेलंगाणाप्रान्ते NGO पदव्यः; प्रभुत्व - सचिवालय-शाखानां, राजधानीप्रान्ते राष्ट्रप्रभुत्वशाखाधिपतीनां कार्यालयशाखानां तु न सम्बध्यन्ते ।

(ख) तेलंगाणाप्रान्ते राष्ट्रप्रभुत्वाधीना तहसील्दार् पदवी तत्सदृश-पदवी च ।

(ग) तेलंगाणाप्रान्ते स्थानिकसंस्थाधीनपदवी (कण्टोन्मेण्ट् बोर्ड् अधिकारे या न वर्तन्ते) कनिष्ठवेतनं रू. ३००/- (तः अनतिरेकि च)

(घ) द्वितीयरिक्तस्थानपूर्तिविषये सचिवालयशाखासु राजधानी-प्रान्ते राष्ट्रप्रभुत्वशाखाधिपतिकार्यालयेषु च NGO पद-वीनां प्रतित्रिकं रिक्तस्थानेषु द्वितीयं रिक्तस्थानं साक्षा-न्नियोगेन पूर्येत ।

(इतः परं अस्मिन् अनुबन्धे चतुर्थानुबन्धे च इदं द्वितीयं रिक्तस्थानं रक्षितस्थानमिति व्यवह्रियेत ।)

३. अस्मिन् शासने प्रथमानुबन्धोल्लिखितरीत्या द्वितीयनुबन्धीय-क ख ग भागेषु उक्तपदवीभिन्नायाः, अथवा घ भागोक्त-रक्षित-स्थानातिरिक्तायाः, यस्याः कस्या अपि वा पदव्या नियोगोऽस्तु न्यायालयस्य ट्रिब्युनल् संघस्य अथवा यस्य कस्यचि दधिका-रिणः निर्णयेन, निश्चयेन, आज्ञापनेन विना (तत्सत्वे एव) तदुद्योगिनो नियोगो मुल्कीनियमानुरोधी न भवतीति हेतोः शासनविरुद्ध इति वक्तुं तदनुगुणकार्याचरणं विधातुं वा न शक्यम् ।

४. नियामकदिनादारभ्य अस्य शासनस्य कार्यान्वयप्रारंभपर्यन्ते मध्यकाले तृतीयभागे द्वितीयानुबन्धोक्त-रक्षित-रिक्तस्थानपूरक-नियोगाः क ख ग भागोक्तपदवीषु नियुक्तानां विषये मुल्की-नियमाः संस्कारिताः परिगण्येरन् । अर्थात् मुल्कीनियमवेध-बाधितास्ते नियोगा स्साक्षान्नियोगास्संभाव्येरन् ।

न्यायालयस्य निर्णयेन ट्रिब्युनल्संघस्य निश्चयेन अथवा यस्य कस्यचिदधिकारिणः आज्ञापनेन (सत्येव) विना एते नियोगाः मुल्कीनियमानुगुणा न भवन्तीति हेतोः शासनविरुद्धा इति वक्तुं तदनुगुणकार्याचरणं कर्तुं वा न शक्यम् ।

५. प्रथमपरिशिष्टगतपदवीषु पूरणीयं तेलंगाणारिक्तस्थानं द्वितीय-परिशिष्टगतपदवीषु पूरणीयं तेलंगाणारिक्तस्थानं द्वितीयपरि-शिष्टगतपदवीषु नियोगांश्च विना इतःपरं नियोगविधानं स्थगितं भवति। परन्तु एतन्नियमानुरोधेन इतःपूर्वं प्रवृत्तानां नियोगानां एतन्निवर्तनं न भवति।

६. राजधानीप्रान्ते षेड्यूल् (निर्दिष्ट) पदवी नियोगानधिकृत्य मुल्कीनियमाः १९७७ दिसंबर ३१ दिनाङ्केन निवर्तन्ते, अपि तु ततः पूर्वं प्रकृतनियोगानां विषये एतन्निवर्तनं न बाधकं भवति।

७. राजधानीप्रान्तेतरतेलंगाणाप्रान्ते षेड्यूल्पदवी नियोगविषये मुल्की नियमाः १९८० दिसंबर ३१ दिनाङ्केन निवर्तन्ते। अपितु ततःपूर्वं प्रवृत्तनियोगानां एतन्निवर्तनं न बाधकं भवति।

प्रथमपट्टीनिर्दिष्ट (षेड्यूल्ड) पदव्यः–

क. राज्यसर्वकाराधीनाः तेलंगाणाप्रान्तीय NGO पदव्यः।

ख. राष्ट्रप्रभुत्वाधीनाः तेलंगाणाप्रान्तीयतहसील्दार्, सिविल् असिस्टेण्ट् सर्जन्, जूनियर् इन्जनीयर् पदव्यः।

ग. स्थानिकसंस्थाधीनाः तेलंगाणाप्रान्तोद्योगाः (कण्टोन्मेण्ट् बोर्डाधीनास्तु न) एतेषां मूलवेतनं रू. ३००/- नाऽतिरिच्येत।

द्वितीयपट्टीनिर्दिष्ट (षेड्यूल्) पदव्यः–

तेलंगाणाप्रान्ते NGO पदव्यः– (१) सचिवालयशाखासु (२) प्रभुत्वशाखाधिपतिकार्यालयेषु (३) समष्टिकार्यालयेषु (४) राष्ट्रप्रभुत्वाधीनसमष्टिसंस्थासु।

विवरणम् १. समष्टिसंस्था नाम तेलंगाणाप्रान्तस्य तद्भागस्य वा या सम्बद्धा न भवति।

विवरणम् २. समष्टिकार्यालयो नाम तेलंगाणाप्रान्तस्य तद्भागस्य वा यस्सम्बद्धो न भवनि।

–अनुवादकः 'अवरः'

# स्वतन्त्र - अभिनवभारतदेशः

लेखकः श्री के. टि. नरसिंहः,
व्याकरण - साहित्य - शिरोमणिः शिक्षाशास्त्री ।

[पूर्वानुबन्धः]

## तृतीयप्रदर्शनम्

**(भारतस्य स्वातन्त्र्यमागतमिति दिनपत्रिकां पठन् सन् श्रीपतिः समायाति । वेदिकामागत्य उच्चैः पठति ।)**

अस्माकं देशस्य स्वातन्त्र्यं सप्तचत्वारिंशदुत्तर - एकोनविंशतिशताब्दे आगस्ट्मासे पञ्चदशदिनाङ्के लब्धम् । अस्मात् कारणात् अद्यप्रभृति देशोऽयं स्वतन्त्रो भवति । देशस्यास्य भारतस्य भारतीयानाञ्च रक्षणं, शासनञ्चास्माभिरेव कार्यम् ।

तदर्थमेव देशेऽस्मिन् जनतन्त्रव्यवस्था कल्पिता । तदनुगुणमेव देशस्थानि विभिन्नानि षट्शतं संस्थानानि एकीकृतानि । किञ्च देशोऽयं भारतः मतनिरपेक्षः स्थास्यति । भारते विभिन्नमतावलम्बिनः, विभिन्नभाषाभाषिणः, विभिन्नप्रान्तीयाः, विभिन्नदेशीयाः, विभिन्नजातीयाश्च विलसन्ति । तेषां सर्वेषां सौविध्यसंपादनार्थं, देशैक्यरक्षणार्थं, सस्यश्यामलतासंपादनार्थं, यान्त्रिकाभिवृद्ध्यर्थं, तद्वारा आर्थिकपुरोगत्यर्थं, सामाजिकजीवनोद्धरणार्थञ्च देशोऽयं मत निरपेक्षः स्थास्यति । किञ्च कार्यनिर्वहणार्थं कापि मन्त्रिमण्डली जनतन्त्रद्वारा भविष्यति । ये रुचिमन्तस्ते राजकीयरङ्गे प्रविशन्तु । तैः स्वस्वनामानि सूचनीयानि जिल्ला

राजकीयकार्यालये। (इति पठन् चिन्तयति) (ततः सामाजिकान् दृष्ट्वा) अस्माभिः स्वातन्त्र्यं लब्धम्। किञ्च अध्ययनमपि पूरितम्। मन्मित्राणि सर्वाणि स्वस्वेच्छानुसारं कार्ये नियुक्तानि सन्ति। सखा आन्टनिः वैद्यशास्त्रे निष्णातस्सन् भिषक् जातः। मित्रं कादर् यन्त्रशास्त्रमधीत्य निर्माणात्मक (Constructions) कार्ये प्रवृत्तः। सतीर्थः भास्करस्तु कृषिविज्ञान (Agriculture) मधीत्य स्वग्रामे अतिविपुलरूपेण सस्योत्पत्ति कृत्वा भास्कर इव आभाति। अतः केवलमहमेको निरुद्योगी वर्ते। अपि च मया राजकीयविज्ञानं (Political Science) वणिक्विज्ञानञ्च (Commerce) अभ्यसितमस्ति। यद्यहं मन्त्री भविष्यामि तर्हि लोकक्षेमं करिष्यामि। अतः तदर्थं प्रयतिष्ये।

**(गच्छति, यवनिकापतनम्)**

## चतुर्थप्रदर्शनम्

**(एकस्मिन् ग्रामे स्थिताः जनाः पिळेक् व्याधिना, कालराव्याधिना च पीडितास्सन्तः स्वग्रामं त्यक्त्वा ग्रामान्तरं जिगमिषवः वर्तन्ते। तदा तत्र भिषक् आन्टनिः अतति। ते सर्वे तं दृष्ट्वा स्वस्वकष्टं निवेदयन्ति)**

वृद्धः– हे भिषक्? प्रवाहिका (कालरा) व्याधिना पीडितोऽहम्। (उदरं पिधम् वमति) तद्वारा मम दिनैकस्य कृते पञ्चविंशतिवारं वमनं रेचनञ्च जायते। (भूयोऽपि वमति। भिषक् तं उपवेशयति)

आन्– कदाप्रभृति ईदृशदशापन्नोऽसि?

वृद्धः– परह्यःप्रभृति। (व्याथामनुभवति)

आन्– परह्यः किं भुक्तं भवता? (तं परिशोधयति)

वृद्धः– परह्य मम पौत्रीविवाहस्तु समजनि। तदा मया विविधानि भक्ष्याणि स्वेच्छया खादितानि। तदाप्रभृति इयं दुःर्दशा समायाता।

आन्– एतेन अवगम्यते वा भवद्भिः "अति सर्वत्र वर्जयेत्" इति? भवता यत् भुक्तं तत्तु न जीर्णं जातम्, अत एव एवं सञ्जातम्।

वृद्धः– अधुना मया किं कार्यम्? (भिषजं पश्यति)

आन्– न किमपि भोक्तव्यम्। जलन्तु न पेयम्। (इत्युक्त्वा तस्मै किमपि औषधादिकं ददाति। किञ्च सूचिकाद्वारा औषधं सिंचति)

वृद्धः– (उत्थाय भिषजे प्रणम्य) कियद्धनं देयम्?

आन्– न किमपि?

वृद्धः– कथम्?

आन्– अहन्तु प्रभुत्वभिषक् (Government Docter) वर्ते। अस्माकं भारतप्रभुत्वं ग्रामप्रान्ते विद्यमानरोगिणां कृते चिकित्साकरणार्थमेव मादृशान् भिषजः स्थापयति। अतः धनं मास्तु।

वृद्धः– पूर्वं बाल्ये वयसि ईदृशं सौविध्यं नासीत्। यः क्लिष्टव्याधिना पीडितः स तु दिवं गच्छति। एवमासीत् स्थितिः।

आन्– तदा वयं परतन्त्राः आस्म। अद्य तु प्रजापालनव्यवस्था (Democracy) वर्तते। अतः वयमद्य सर्वेऽपि सुखिनः भवामः, भविष्यामश्च।

**(भिषग्वचनेन अतीव सन्तुष्टः वृद्धः भूयोऽपि तस्मै नमस्कृत्य गच्छति। तदाऽन्यः युवा प्रविशति)**

युवा– भोः! नमस्कारः।

आन्– प्रणामः। (आसनं प्रदर्शयति) को व्याधिः?

युवा– अहन्तु पिळेक् व्याधिना बाधितोऽस्मि ।

आन्– कदाप्रभृति ?

युवा– ह्यः प्रभृति ।

आन्– को हेतुः ?

युवा-- (ईषद् लज्जापुरस्परं विहस्य) कन्यकान्वेषणार्थं ग्रामान्तरं जगामाऽहं तत्रायं व्याधिः प्रसृत आसीत् । स तु मामपि आवृणोति स्म ।

आन्– हम् ? तथा कथय । व्याधिरयं संसर्गजन्यो भवति । अतः यत्रायं व्याधिः वर्तते तत्रस्थैः जनैः सद्य एव प्रतिरोध-सूत्रिका स्वीकरणं कर्तव्यम् ।

युवा– अप्यहं जीवेयम् ?

आन्– (तं सादरं आस्फालयति) मास्तु ते प्राणशङ्का । यतः भवादृशा एव युवानः भाविभारतनिर्मातारः भविष्यन्ति । अतः त्वत्प्राणा अमूल्याः । यथाकथञ्चित् व्याधिं निवारयिष्ये । (तस्मै भिषक् औषधं दत्वा किमपि पत्रञ्च विलिख्य यच्छति)

युवा– अयं भोः ! पत्रमेतत् किमर्थम् ?

आन्– त्वत्कृते मयाऽधुना तात्कालिकचिकित्सा कृता । परन्तु तद्वारा स्वस्थो न भविष्यसि त्वम् । अतः पत्रमेतत् गृहीत्वा प्रभुत्व - मण्डलप्रधानं-वैद्यशालायां (Government District Headquarters Hospital) प्रदर्शय । ते तु ते चिकित्सां कुर्युः ।

(युवा नमस्कृत्य गच्छति । तदा एकः अपरं पुरुषं स्वहस्ताभ्यां धृत्वा आयाति । तौ भिषजे नमस्कृत्य आगमनकारणं योजयन्ति)

एकः– वैद्यवर ! अयं ग्रामेऽस्मिन् अन्यतमः गृहस्थः । एषः दिनेऽस्मिन् प्रभाते स्वप्राणत्यागार्थमयतत ।

आन्– किमर्थमेवमकरोत् अयम् ?

एकः– अयन्तु महाकुटुबी । अस्य सप्त कुमार्यः, अष्टकुमाराश्च सन्ति ।

(अनुवर्तते)

# कालिदासकृतिषु सूक्तिमौक्तिकानि

रचयिता– श्री खंडविल्लि सूर्यनारायणशास्त्री.

(पूर्वानुबन्धः)

अत एवोक्तं मनुधर्मशास्त्रे –

"न तेन वृद्धो भवति
येनाऽस्य पलितं शिरः ।
यो वै युवाऽप्यधीयानः
तं देवाः स्थविरं विदुः ॥"

अनेन धर्मप्रबोधेन युवकाः एवं प्रबोध्यंते यत् "बाल्यात् प्रभृति तत्वज्ञानाऽदिसमुपार्जनेन हे युवकाः यूयं मान्यानामपि माननीया भवत" ।

एवं शिवमनादृतवंतं कुहनावटुं प्रति गिरिजावाक्यमेतत्–

"न कामवृत्तिः वचनीयमीक्षते" (कु. सं. ५–८२) एतया सूक्त्या लोकापवादात् भीत्यभावादिरूपः स्वेच्छाव्यापारवतां स्वभावः अत्र संदर्शितः लोकप्रवृत्तिप्रख्यापनाय । एवं "न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्" (कु. सं. ५–८३) महात्मनः प्रति प्रवर्तमानां निन्दां शृण्वन् यः उपेक्षते सोऽपि पापभाक् भवति। गुरुनिन्दाश्रवणस्य सद्यः पापजनकत्वेन अनर्थप्रदत्वात् न केनाऽपि श्रेयोकांक्षिणा गुरुजनादिनिन्दा सर्वदा सर्वथा उपेक्षणीया इत्येव मत्र सूचितम् । एवं "विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया" (कु. सं.८–६५) स्वतः निर्मलप्रकृतिमत्सु कालभेदात् प्राप्त तात्कालिको विकारः चिरं न स्थास्यति, स्वतः धवलश्चंन्द्रः उदयरागेण रक्तोऽपि अचिरादेव स्वीयां धवलशोभां प्राप्नोत्येव । अत्र निर्मलप्रकृतिमतां शीलसंदर्शनं कृतं । एवं पृथक् प्रवृत्ति - परि-

ज्ञानेन पाठकानां सर्वविधमपि लोकपरिज्ञानं संजायते । इतःपरं रघुवंशमहाकाव्यात् काश्चन सूक्तयः प्रदर्श्यन्ते ।

दिलीपमहाराजकर्तृकः कामधेनु पूजाव्यतिक्रम एष तत्संतानप्रतिबंधकरूपेण परिणत आसीत् इति वसिष्ठमुनिकथनसंदर्भे "प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" (रघु. १–७९) पूज्येषु विषये जायमानः यः अनादरभावः, सः श्रेयःप्रतिबंधरूपेण परिणमति । अतः न कदाऽपि पूज्याः अनादर्तव्याः इति अत्र सूक्तेः प्रबोधः । एवं रघोः जैत्रयात्रायां रघुं शरणं गताः तच्छत्रवोऽपि सुखेन अवसन् इति कथनसंदर्भे कविवाक्यम् –

"प्रणिपातप्रतीकारः संरंभोऽपि महात्मनाम्" (रघु) महात्मनाम् कोपः परेषां प्रणामसमर्पणावधिकः । अर्थात् परेषां अहंकार एव महात्मनां आवेशकारणं, न तु तेषां सुखजीवनादि । सामाजिकजीवित - परिज्ञानाय एतादृशसूक्त्यर्थपरिज्ञानं पाठकानां परमाऽवश्यकं ! एतादृशपरिज्ञानेन समाजस्य धार्मिकजीवनलाभः । एवं शतृभ्यः संगृहीतं सर्वमपि धनं रघुमहाराजः स्वविश्वजिद्यागे सर्वस्वदक्षिणारूपेण विनियुक्तवान् । अत्र संदर्भे "आदानं हि विसर्गाय सतां वारिमुचामिव" (४–८६)

घनशब्दवाच्यैः मेघैः ऊष्मरूपेण आर्जितं सर्वमपि जलं पुनः प्रजानामेव भूत्यर्थं वर्षरूपेण यथा लोकाय वितीर्यते, तथा सज्जनैः स्वार्जितं सर्वमपि वस्तुजातं लोकोपकारायैव विनियुज्यते । अनेन उदारशीलानां प्रवृत्तिः लोकाय संदर्शिता । एवं सर्वस्वदक्षिणा - प्रदानकारणेन निस्वस्य रघुमहाराजस्य निःस्वत्वमपि श्लाघ्यतरं भवति इत्यत्र संदर्भे "पर्यायपीतस्य सुरैः हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः" (रघु. ५–१६)

शुक्लपक्षे देवेभ्यः स्वकलाप्रदानकारणेन जनितः चन्द्रस्य कलाक्षयः तत्कलाभिवृद्धेरपि श्लाघ्यतरः भवति । एनमेव

उदारभावमधिकृत्य स्वसुभाषितत्रिशत्यां भर्तृहरिमहाकविः इत्थमकथयत् "···· कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता, तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नराः" एतादृशसूक्त्यर्थाः लोकहितसाधने पाठकान् प्रचोदयंतीति निश्चप्रचं ।

मतंगमहर्षेः शापानन्तरकालिकीं शान्तप्रकृति मधिकृत्य गन्धर्वराजकुमारः अजमहाराजमेवं कथयति "उष्णत्वमग्न्यातपसंप्रयोगात् शैत्यं हि यत् सा प्रकृतिर्जलस्य" (रघु. ५–५१) "स्वतः शान्तप्रकृतेः महर्षेः कोपादयः तत्फलकाः शापप्रदानाऽदयश्च विपरीतसन्निवेशबला देव जायमाना अपि अचिरादेव प्रकृतिं प्राप्स्यंति" इति ज्ञायते ।

इतःपरं मेघसंदेशकाव्यात् काश्चन सूक्तयः । "कामार्ता हि प्रकृतिकृपणाः चेतनाचेतनेषु" (पू. १–५) हे पाठकाः ! कामार्ता इव यूयं युक्तायुक्तविहीनाः न भवतेति अत्र संदेशः ।

एवं "याच्ञा मोघा वरमधिगुणे नाऽधमे लब्धकामा" (१-६) यतः अधमयाचना सफलाऽपि न स्पृहणीया, अतः सा निंदिता । अतः बुद्धिमान् उत्तमपुरुषमेव याचते । अत एवोक्तं "एकः कृती शकुंतेषु योऽन्यं शक्रान्न याचते" इति । "रिक्तस्सर्वो भवति हि लघुः पूर्णता गौरवाय" । सर्वस्याऽपि कृते पूर्णत्वमेव गौरवकारणं न तु शून्यत्वं । सर्वमपि रिक्तं वस्तु लाघवाय भवति । पश्यत, घनशब्दवाच्यः घनोऽपि जलेन यदि न पूर्णः, वायुना उद्धूयते । जलेन गौरवयुक्तो घनः न तथा । लौकिकदृष्टयाऽपि रिक्तः (निस्वः) पुरुषः लघुतया (अल्पत्वेन) मन्यते । एव दुर्बलः लघुर्भवति । अत्र श्लोकव्याख्याने विशेषार्थो द्रष्टव्यः ।

"आपन्नार्तिप्रशमनफलास्संपदो ह्युत्तमानाम्" (१–५७) "हे मेघ ! मध्येमार्गं यदि दावाग्निः स्यात्, तं प्रशमय्य पुरः साधय" । इति यक्षमुखेन मेघ प्रति कथयन् कालिदासकवि-

अत्र अनेन अर्थांतरन्यासेन संदेशं महांतमस्मभ्यं संप्रयच्छति। उत्तमशीलवतां अर्थ - द्रव्य-शक्त्याऽदिसंपदः लोकहितायैव विनियुज्यंते। यथा लालबहदुर-शास्त्रि - श्रीराम - भारतेंदिरा-प्रभृतीनां विज्ञानादिसंपदः भारतबंग्लादेशादीनां आर्तिहर-णपूर्वकं तद्देशवासिनां श्रेयसे विनियुक्ताः। अतः पाठकाः! भवतां विज्ञानाऽदिसंपदः भव-द्देशश्रेयसे विनियुज्य उत्तमपुरुष-पदं प्राप्नुत।

एवं कालिदासीयास्सर्वा अपि सूक्तयः लोकहितबोधनेन सर्व-कालेषु सर्वेषां शिरोधार्याः, मौक्तिकमाला इव कंठे अलं-कर्तव्याश्च भवन्ति।



सप्तम पुण्यतिथिप्रीत्यर्थम्

# अपूर्वं तव हौतात्म्यम्

लेखकः श्री या. वि. देवासकरः, वटपत्तनम्.

हा! गतो हा!! दिवं दूरं, शास्त्री, लालबहादुरः।
लोकप्रियः सुहासो हि ताश्कंदे शान्तिपर्वणि॥
सुधन्योऽसि महामात्य, शास्त्रिन्! लालबहादुर।
अपूर्वं तव हौतात्म्यं ताश्कंदे शांतिस्थण्डिले॥
रतो भारतकार्येषु निःस्वार्थविषयेषु च।
जातो "भारतरत्नः" स सुमहान्मरणोत्तरम्॥

अकिंचनः सन् प्रमुखः स मन्त्रिणाम्
स कोमलांगो दृढनिश्चयी सदा।
स वामनो ना सुमशन् समुच्यते
न सन्ति यथार्थ्यविदो हि शास्त्रिणः॥

विख्यातराजकार्याय, धृतधैर्याय, धीमते।
ऋजुसत्याभिसंधाय, शास्त्रिवर्य! नमोऽस्तु ते॥



# श्रीवेंकटेशशतकम्

## पैत्तांबाडि महाकवि व. रामानुजाचार्यविरचितम्.

(पूर्वानुबन्धः)

बधिरः श्रृणोति परभाषितं मुदा
कुणिरप्यहो लिखति लब्धहस्ततः ।
अभिसंचरत्यपि च पंगुरद्भुतम्
त्वदनुग्रहेण चरितं तव प्रभो ॥

**इति चित्रचरित्रदशकम्** ॥ ८ ॥

**अथ दिव्यायुधस्वीकारदशकम्** ॥ ९ ॥

पूर्वं कदाचित् त्वयि भक्तवर्यः श्रीतोण्डमान्नामकचक्रवर्ती ।
सिंहादिनामासुरपीडितस्त्वां वधार्थमेषां शरणं जगाम ॥
तदा शंखचक्रे वधार्थं च तेषां इमे ते दिशेतां जयं भक्तवर्यं ।
इति प्रादिशस्त्वं वरावायुधौ ते स्वयं तोण्डमानाख्यभूपाय तस्मै ॥

तस्मिन् श्रीचक्रवर्तिन्यरिजननिवहान् तान्निहत्यायुधाभ्यां
दित्सत्येतौ पुनः त्वा दिशति जयकरौ स्तां त्वयीत्येव भूपम् ।
यद्वद्बिंबेषु मन्त्रैरहमपि च वहामीह सान्निध्यरूपं
तद्वत्कालान्तरे भूपतिरपि स मुदा स्वार्चयत्तौ यथाज्ञम् ॥

पश्चात्तद्वंशजा नल्लान् - शिष्या भूत्वा त्वदायुधौ ।
अशक्ता अर्चितुं पूर्ववृत्तमुक्त्वाऽदिशन् गुरौ ॥

कालेगते बहुसमे त्वयि शंखचक्र-
हीने च वैष्णवविहीनतया बलिष्ठाः ।

शैवाश्शिवोऽयमिति राजबलाद्वदन्तः
पूजापरान् वृषगिरीश नरानहिंसन् ॥
श्रीशैलपूर्णप्रमुखाश्च भक्ताः केचिद्ररक्षुः तव वृत्तविज्ञाः ।
तानर्चकान् त्वां तव मन्दिरञ्च शेषाचलाधीश कृपापयोधे ॥
त्वन्मंगळं प्रथमतो विरचय्य भाष्यं
रामानुजो यतिपतिः प्रणिनाय जित्वा ।
शैवान् तदा श्रुतिपुराणमुखैर्वचोभि-
र्योऽस्थापयत्सदसि विष्णुमसौ परं त्वाम् ॥
पुनः काळहस्तीशराजाज्ञया ते विवादं प्रकुर्वन्त आसन्हि शैवाः ।
तदा चक्रवर्ती गुरौ भाष्यकारे पुरावृत्तमार्याऽर्पयत्तौ निजस्थौ ॥
ये स्वीकरोति भगवान् पुरतस्स्थितेषु
देवद्वयायुधवरेषु तदीयदेवः ।
रात्रावितीर्य यतिराजमुखाश्च शैवा-
श्चक्रुस्तथैव हि कवाटतले च मुद्राम् ॥
सर्वे प्रभाते धृतशंखचक्रं संसेव्य चासन् गतसंशयास्ते ।
तदाऽदिशो यो मम पूर्विकस्य त्वं चक्रवर्तीत्यभिधां स नोऽव्यात् ॥

**इति दिव्यायुधस्वीकारदशकम् ॥ ९ ॥**

**अथ पद्मावतीविवाहदशकम् ॥ १० ॥**

मायावीति वचोवदत्र भवति प्राप्ते च वैकुण्ठतो
मर्त्यानां कलिकालदूषितहृदां नो रक्षणार्थं मुदा ।
लक्ष्मीरप्यनपायिनी तव मुदे त्वद्हृत्स्थलस्था सदा
भूमावैहत सर्वलोकजननी जन्माऽवितुं नो जनान् ॥
पाराशर्यस्य पुत्रश्शुक इति महितो जातमात्रे तपस्वी
छायां पुत्रं हि कृत्वा निजपितृपुरतो देवलोकं जगाम ।
योऽसौ छायाशुकःश्रीयदुपतिचरितं प्राह दिव्यं परीक्षि-
द्राजायैवाभवत् श्रीशुकपुरममलं तत्तपरस्थान मेतत् ॥

(अनुवर्तते)

# कॉमेट् वायुयानस्य कार्यप्रणाली

(गूढलेखिनी)




साधारणतः सर्वाण्यपि वायुयानानि अग्रतः वायुं आकृष्य पुच्छं प्रति तं प्रक्षिप्य धावन्ति, उडङ्यन्ते च। तथापि तेषां कार्यसाधने विविधता वर्तते। सामान्यानि तु चक्रव्यजनकैः तत् साधयंति । 'जेट' इति ख्यातानि यानानि तु वायुः तथा पेट्रोल् एतयोः विस्फोटेन तत्कुर्वंति । परं कॉमेट यानानि तु उभयो मध्यमपथं अनुसरंति । तादृशी एव तेषां धावनगतिः भवति ।

तेषां उदरे एक बृहन्नालमार्गः नासिकात पुच्छपर्यन्तं दीर्घः सुदृढः तिष्ठति । अग्रभागे बहिः एका सुदृढा जालिः भवति येन अवाञ्छिताः पदार्थाः अन्तरे न प्रविशेयुः । ततः अन्तरे भवति त्रि-चतुस्तर-युतः तर्ब-संप्रसरकः वा चक्रि-संदामकः (टर्बो-कॉम्प्रेसर) । तदनंतरनालमार्गे एव दूरे भवति एकं तैल-ज्योतिः । तत्पश्चात् नालः न्यूनाकारतां गच्छति पुच्छपर्यन्तं ।

याने नालमार्गात् बहिः बृहन्ति इंधयिनानि (इंजिनस्) पेट्रोलेन प्रचाल्यन्ते । तच्छक्त्या संप्रसरकः महता रभसेन परिभ्राम्यति । तेन वायुः नाले संदमितो भवति । तत्र उदरे प्रज्व-

लति केरोसीनस्य महत् ज्योतिः। तत्रापि तैलं अतितप्तं नलिमुखाद् आगच्छति। तेन संदमितो वायुः पुनः प्रतप्यते। एवं तस्य प्रसरः अतीव विवृद्धः भवति। पुच्छमार्गात् महता क्षोभेण निर्गच्छन् स वातः समग्रं यानं पुरः धावयति।

अस्मिन् कार्ये शतशः गॅलनमितं - केरोसीनतैलं प्रति - घंटं प्रज्वाल्यते। यथा यथा तद् यानं आकाशं आरोहति, तथा तथा उच्चतरं गच्छेत्, केरोसीनव्ययः न्यूनतां गच्छति।

एवं तस्मिन् सामान्यवायुयानस्य च जेटस्य च गुणाः वर्तन्ते। महता जवेन गच्छन्ति एतानि, महन्तं धूम्रं च वमन्ति यः सर्वेषु देशेषु वातावरणे प्रसृतो भवति।

जेटयानानां विस्फोट-कक्षाः उभयपक्षयोः पार्श्वभागे भवंति, न तु उदरे।

केवलं जेट तथा रॉकेट् यानानि वातावरणरहिते आकाशे अपि प्रधावितुं शक्नुवंति।

सर्वेषामपि वायुयानानां उड्डयनं पक्षरचनावैशिष्ट्येन एव सुशकं भवति। वायौ उड्डयनं कुर्वंति सति तस्य अध ऊर्ध्वगमयं 'एलरान्' इति ख्यातानां पक्ष-अग्रभागस्थानां पट्टिकानां चालनेन, तथैव सव्यापसव्यदिशाचलनं च 'रडार' इति पुच्छभागस्थेन फलक - त्रयेण च क्रियते।



# परीधाविदक्षिणायनपरीक्षासु सर्वप्रथमतया उत्तीर्णाः



परिचयः

एस्. वेदवल्ली, श्रीरंगम्



अभिज्ञः

के. वेंकटरमणः, श्रीरंगम्



विचक्षणः

बी. वेंकटकृष्णः, मदुरै - बी.



समर्था

एन्. राजकुमारी, मदुरै - ए.

# महापुरुषाय श्रद्धांजलिः

लेखकः श्री विद्यानिधिः मोरेश्वर ग. उपाध्यायः

ॐ नमो विश्ववंद्याय नित्यं विश्वहितात्मने ।
स्वर्गं गताय धीराय पूज्यराजाजिने नमः ॥

विललाप च भारतं तदा परलोकांतरिते महाशये ।
विधिनाऽकरुणेन कारिता भृशदुःखं च जगत् सभारतम् ॥

देशप्रेममनाः सभासु धिषणः सद्राजनीतौ वरः
श्रीमत्संस्कृतवाक्सुरक्षणरतो नेता प्रशस्तो मतः ।
विद्याधर्मपरायणः शुभमनाः सत्संस्कृतेः पोषकः
हा ! स्वर्गं समगादसौ प्रियतमः राजाजिनामा बुधः ॥

श्रीमद्गांधिमहात्मनो व्रतपरः सत्यैकनिष्ठः स्तुतः
व्यक्तित्वेन महांश्चरित्रगुणतः देवोपमः सत्तमः ।
आद्यो राष्ट्रपतिर्नवीनपदवीं प्राप्ता नवे भारते
हा ! स्वर्गं समगादितो गुणनिधी राजाजिराराजते ॥

यस्यासीत् कविता प्रसादबहुला बिद्वन्मनोहारिणी
यो विद्वत्कविशेखरः स्मितमुखो यो भूद् विनोदप्रियः ।
यो देशस्य हितात्मकान्यतिशयं कार्याणि निःस्वार्थतः
राजराजीविबुधे दिवंगतवते श्रद्धांजलिर्दीयते ॥

शांतिं शांतात्मने दद्यात् भगवान् कमलापतिः ।
इत्येवं प्रार्थये नित्यं जगदीशं मुहुर्मुहुः ॥



# कर्मयोगी राजाजी

लेखकः श्री ना. व. निगमान्तम्, प्रोद्दुटूरु.

होशूरुपुर्याः सविधेऽग्रहारे यो तोरपल्याख्य अवाप्य जन्म ।
सच्चक्रवर्तीप्रथमेन राजग्रोपालनाम्ना प्रथितो बभासे ॥

यो बेङ्गलूरौ पुरि मद्रनाम्न्यां विद्यां समस्तां समधीत्य धीमान् ।
बि. यल् परीक्षां च समाप्य तूर्णं तामड्वकेड्वृत्तिमसावगृह्णात् ॥

यः शेलपुर्याः प्रभुरेष भूत्वा कादम्बरीविक्रयमुख्यशालाः ।
तत्रत्यदीनानुजिघृक्षयाथ दूरीचकार प्रथमो बुधानाम् ॥

जनस्य गुण्ठो हरिपूर्वकस्य वृद्धेः कृते यो यतते स्म नित्यं ।
अस्पृश्यतावारणबद्धदीक्षो मद्रास्पुरे वासमयं चकार ॥

गान्धीसुमित्रेण मतेन येन स्थानान्यनेकानि विभूषितानि ।
गवर्नराद्यानि कृताः प्रबन्धाः रामायणादेरनुवादरूपाः ॥

गान्धीयमार्गानुचराग्रयायी यो देशरक्षार्थमवाप कारां ।
चतुर्जनानां सममन्त्यजानां सर्वैरियेषालयसंप्रवेशम् ॥

समस्तविद्याचतुरो विवेकी यः कर्मयोगी दृढचित्तजीवी ।
स्वतन्त्रनामानमसौ सुपक्षं विनिर्ममे दुःसहवार्धकेपि ॥

सोऽयं महात्मा सुमना दयालुः प्रारब्धसंसाधनसक्तचेताः ।
निमज्जयञ्छोकरसेऽब्धिकल्पे राजाजियोगी जनमाप मुक्तिम् ॥

राजाज्यभावेपि तदीयकीर्तिः पवित्रमूलाऽब्जनिभा विभाति ।
तदीयसूक्तिः सुखदायिनी तामन्या विनास्माकमतो गतिर्न ॥

# मकरसंक्रान्तिमहोत्सवः

लेखकः श्री ना. व. निगमान्तम्, प्रोद्दुटूरु.

सङ्क्रान्तिर्भाति लोके महितमकरमासीयधस्त्रे दिनेशे
हेमन्ते शीतवाते प्रविशति मकराख्यं शुभं राशिमाद्ये ।
सस्याकीर्णेऽयने या युवजनहृदयोल्लासिनी सोत्तराख्ये
सर्वानुष्ठीयमाना भक्तिकशतसमामूचिका सुप्रसिद्धा ॥

कृत्स्नानामुध्द्वानामवनितलजुषामग्रगण्यो महोऽयं
सङ्क्रान्त्याह्वो यथेच्छं त्रिदिनपरिमितो देशवर्णानुसारं ।
तत्रानुष्ठीयतेऽसौ प्रथमसुदिवसे चापमासान्तिमेऽह्नि
भोगीत्याख्यां दधानो विलसति नितरां भोगसन्तानदायी ॥

प्रत्यूषे जीर्णशूर्पाद्यखिलमपि तथा वस्तुजातं च केचि-
त्तृण्यां भस्मावशेषं सह चपलगुणैरात्मनिष्ठैरदभ्रैः ।
कुर्वन्तो नव्यवस्त्राभरणविलसिताः स्वेष्टदेवाय भूयो
मुद्गान्नं हिङ्गु कृष्णार्द्रकभररुचिरं साज्यमत्रार्पयन्ति ॥

अन्येद्युः सङ्क्रमाख्ये शुभददिनवरे गोमयाद्यैरगारं
शुध्द्वीकृत्य प्रभाते शुचिवसनधरा नूतने पात्रवृन्दे ।
मृद्वीकाक्षीरयुक्तं घृतमधुमधुरं सँलसच्छर्करान्नं
कन्दादिव्यञ्जनाढ्यं कुशलदहरयेभुञ्जते संनिवेद्य ॥

कालेऽस्मिन्विप्रवर्या विधिविहितकरा पैतृकं कर्मजातं
कुर्वन्ति स्वेच्छया ते कुलगतकुशलं स्फीतमाकांक्षमाणाः ।
पीतेक्ष्वाम्रादिमुख्यैर्मधुरफलशतै भक्ष्यभोज्यैश्च साकं
सानन्दं देवपूजां विदधति सकला उत्सवेस्मिन् गरिष्ठे ॥

तार्तीयीके दिने तु प्रतिगृहममितान्गोवृषान्कासरांश्च
कासारं प्रापयन्तः विमलतमजलै क्षालयन्तश्च शृङ्गे ।
हारिद्रैश्चूर्णजालैर्विविधनवरसालादिमाल्यैः सवर्णै-
रावालं पूजयन्ति प्रमुदितमनसः कुङ्कुमैर्मण्डयन्ति ॥

एवं त्रिदिनपर्यन्तः सादरं समनुष्ठितः ।
उत्सवस्सुजनैर्लोके सङ्क्रान्त्याख्यः प्रकाशते ॥



# प्रतीक्षा

ले. श्री दीवि. श्रीनिवासदीक्षितः, गुन्टूरु.

प्रातःकालीनसूर्यस्य रश्मयः समस्तविश्वोपरि स्वर्णधूलिं विकिरन्ति स्म। सानन्दाः पक्षिगणः श्रवणसुभगं कूजन्ति। परितः पुष्पाणि विकसितानि आसन्। तरुषु, पुष्पेषु, लतासु च प्रकीर्णाः तुषारबिन्दवः मौक्तिकमयं जगदिति प्रपञ्चयन्ति स्म प्रेक्षावतो जनान्। प्रकृतिकान्ता स्वसौन्दर्यातिशयेन मन्दहासं कुर्वन्ती तत्प्रदेशस्यैव अनुपमां शोभां जनयति। तस्मिन् बहुगुणरमणीये प्रदेशे अपूर्वम् किंचिद्वैद्यसेवासदनम्। तद्भवनं सुधालेपेन प्रकाशते, रोगिणः आकर्षति च। श्रेणित्रयप्रशोभितमिदम्। प्रथमश्रेण्यां शस्त्रचिकित्सा,बालचिकित्सादिविभागाः। द्वितीयश्रेण्यां वाजीकरण - रसायनचिकित्सा - ग्रहचिकित्सा - विभागाः। तृतीयश्रेण्यां ऊर्ध्वांगचिकित्सा - अगदतंत्रादिविभागाः। सर्वत्र कुशलाः महान्तः भिषङ्मणयः। तस्यां वैद्यशालायां प्रथमश्रेण्यां द्वाविंशतिभागे षष्ठ्यां खट्वायां एकः तरुणः आसीत्। तस्य नाम दिनेशः। सः दैवदुर्विपाकात् कस्याञ्चिद्द् संघटनायां अन्धत्वमाप। अत एव वैद्यशालायां प्रविष्टः। वस्तुतः अतीव सुन्दरः दिनेशः। यदा वैद्यशालायां प्रविष्टः तदा रोगिसेविका काचित्कन्यका परिचर्यार्थं नियुक्ता। तस्याः नाम सुषमा इति। प्रतिदिनं सा दिनेशस्य धैर्यं बर्धयन्ती, सपर्यां कुर्वन्ती, तस्य प्रेमपात्रमासीत्, गाढं स्निह्यति दिनेशः सुषमायाम्। एकदा सुषमा आगत्य—

"आर्य ! श्वः एव भवतः अन्धत्वापनोदनाय शस्त्रचिकित्सां करिष्यति भिषग्वरः" इत्यवदत् ।

दिनेशः ईषद्विहस्य– "सुषमे! अहं द्रष्टुकामो भवामि । मम अन्धत्वापनोदनं भविष्यति किम् ? नहि विश्वसिमि" इत्यभाषिष्ट । तदा मृदुमधुरवचनैः सँलपन्ती सुषमा–

"न संशयमनारुह्य नरो भद्राणि पश्यति । आर्य ! धैर्यं वहतु भवान् । द्रष्टुं शक्तो भविष्यति । सन्तोषेण तिष्ठ । चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च" इति सानुमयमब्रवीत् ।

मित्राणां शुभकामनाः सत्यमेवातिशयबलशालिन्यो भवन्तीति सर्वविदितम् । दिनेशः पुनः–"सुषमे! तव अहमेव प्रियतरः किं ? तर्हि, मयि इव शृंगाररसपरिपूर्णकटाक्षान् प्रसारय । अनन्यसामान्यरूपरेखाविलासान् कदा द्रक्ष्यामि ? अन्धत्वापनोदनानन्तरं त्वां प्रणयिनीं करिष्यामि । किं तेऽभिमतम्?" इत्यवोचत् मृदुमधुरमन्दहासेन ।

सुषमा लज्जया अवनतानना भूत्वा "भवतः शुश्रूषा मे कर्तव्यपालनमेव । कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" इत्युक्त्वा जोषमास्ते । अत्रान्तरे वैद्यस्याह्वानं श्रुत्वा सा निर्गता ।

शोभनोऽयं दिवसः, यतः मम अन्धत्वापनोदनाय शस्त्रचिकित्सा क्रियते । शस्त्रचिकित्सा सफला भविष्यति वा न वा ? घण्टिका सप्तवादनमकरोत् । चिकित्सां अष्टवादनसमये करिष्यति भिषग्वरः । अष्टवादनाय केवलमेकवादनमवशिष्टमासीत् । तस्य हृदयस्पन्दनं अत्यन्तं तीव्रतरमभूत् । घण्टिकानादं श्रुण्वन् सुमधुरस्मृतिषु विलीनोऽभूत् दिनेशः । चिकित्सानन्तरमेव सुषमा द्रष्टव्या, यतो हि सा सुन्दरीति मृदुमधुरमनोज्ञचमत्कारलसितेन संभाषणेनैव ज्ञाता । अतः तामेव प्रियतमां करिष्यामि ।

श्रूयते घण्टिका । अष्टवादन-समयोऽभूत् । दिनेशस्य चिकित्साऽपि सफलाऽभूत् । अत्रान्तरे सुषमा कार्यान्तरेण स्वग्राममव्रजत् । दिनेशस्य चिकित्सायां नेत्रे स्थापिता पट्टिका अपनोदिता । अनुपदमेव नेत्रद्वयं नहि विस्फारितम् । भिषक् महाशयः "नेत्रमुन्मीलय" इत्यकथयत् । दिनेशस्तु नोन्मीलयति । अपि च सुषमां आह्वयत् । तदा वैद्यः–

"सुषमा कार्यान्तरेण स्वग्रामं गता । इदानीं सा अत्र न स्थिता" इत्यवदत् । कञ्चित्कालं तूष्णीं स्थित्वा, नेत्रमुन्मीलयति स्म दिनेशः । अन्धत्वमपनोदितम् ।

अनुपदं सुषमायाः विलासं ज्ञात्वा, तस्याः ग्रामं गतः । ग्रामाद्बहिः प्रशान्तवातरमणीय आक्रीडः । सर्वफलपुष्पलताद्रुमप्रशोभितोयम् । तदुद्यानस्य दर्शनादेव विचित्रानुभूतिं प्राप्तः दिनेशः । तस्मिन्नुद्यानस्य मध्ये सारणिः । तस्याः पार्श्वे अतिपन्थाः । स पन्थाः अतीव रमणीयतया निर्मितस्य भवनस्याग्रं प्रापयति । तद्भवनमेव सुषमायाः गृहम् । तद्भवनं गत्वा–"आर्याः, सुषमा अस्ति वा न वा"? इत्यपृच्छत् ।

भवनान्तरात् चत्वारिंशद्वर्षीयः कश्चिदागत्य– "सुषमा इदानीमेव बहिर्गता, उपविशन्तु । झटित्येवागमिष्यतीत्युक्तवान् । तत्संभाषणेन– सः सुषमायाः पिता इति, सुषमा केवलं स्वच्छन्दं वैद्यशालायां सेवां करोतीतिच ज्ञातवान् । अत्रान्तरे भवनस्य पुरतः "फियट्" तैलशकटमागत्य स्थितम् । तस्माच्छकटात् अष्टादशवर्षदेशीया काचिद्युवतिरागता । तस्याः शरीरं किञ्चित् लम्बतरं सुदृढानि चाङ्गान्यासन् । तस्याः कृष्णाः कुटिलाः अलकाः कर्णकपोललम्बिनः । तस्य मुखं भयेन विषादेन वा म्लानमासीत् । अवनतानना सा आगत्य दुःखविवशा घूर्णन्ती–

"तात ! सोदरी सुषमा तैलशकटप्रमादे मृता" इत्युक्त्वा

गृहमाविशत् । पिता तु दुःख-मनुभवन् तत्रैवासने स्थित्वा मूर्छितः । दिनेशः उन्मत्त इव पश्यन्, रटन्, बहिरधावत् ।

प्रतीक्षा नाम का ?

ज्ञातप्राप्यवस्तु प्रति प्रार्थना प्रतीक्षेति ममाशयः ।

## ग्रन्थपरिचयः

**30 రోజులలో సంస్కృతభాష రు. 2-90**

**Learn Sanskrit in 30 days Rs. 2-90**

30 நாட்களில் ஸம்ஸ்கிருதம் Rs. 2-90

**प्राप्तिस्थानम्–**

Balaji Publishers, 17, Oil Monger St., Madras - 14.

संस्कृतभाषायाः अध्ययनाध्यापनतृष्णावति अस्मिन् काले, बोधकानां असन्निहितदशायां कुतूहलिनः अल्पेनैव कालेन स्वप्रयत्नेन तामध्येतुं पारयन्ति उपरिनिर्दिष्टपुस्तकद्वारा । संस्कृतभाषाया चैतन्यवत्तायाः नवनवोन्मेषशालितायाश्च अनुभवेन, भारतीयभाषाणां सर्वासामपि तदेकावलंबनत्वपरिज्ञानात् च तामध्येतुं अतिकुतूहलवद्भ्यः पुस्तकत्रयमिदं महदुपकरोति । बालाजीप्रकाशनसंस्थाया अधिकारिणो धन्यवादार्हा एतत्सभायाः यतस्वेन विधातुमशक्यं सर्वकांक्षितं देशभाषामाध्यमिकं (आंग्लमाध्यमिकं च) संस्कृतस्वयंशिक्षणमार्गं समदर्शयन्निति । इदं चास्माकं गर्वकारणं यद् अस्मत्परीक्षामन्त्री श्रीमान् श्रीनिवासाचार्य एव एतत्प्रणेता इति ।

अत्र (देवनागर) अक्षरलेखनप्रकारमारभ्य - नाम, सर्वनाम, क्रिया, अव्ययादीनां प्रयोगाभ्या-

साः, नित्यव्यवहारोपयुक्त-पदानि, बालकथाः,सुभाषितानि, सदुपदेशाः चेति बह्वोंशाः तत्तत्प्रान्तलिप्या चानुसृताः अनूदिताश्च वर्तन्ते। अन्ते च प्रान्तीयभाषापदानां अकाराद्यनुक्रमणिका च संस्कृतप्रतिपदैः दत्ता या स्वतंत्रतया वाक्यरचनाकर्तृणां करदीपिकेव मार्गदर्शिनी स्यात्।

विशेषतः बालाजी - प्रकाशनाधिकारिणः संस्तवनीयाः ये National integration Languages Series नाम्ना आंग्लहिंदीतेलुगुमाध्यमेन तमिळस्य, आंग्लहिंदीतमिळमाध्यमेन आंध्रभाषायाः, आंग्लांध्रद्राविडमाध्यमेन हिन्द्याः, आंग्लांध्रद्रविडमाध्यमेन मलयाळभाषायाः, आंग्लांध्रमाध्यमेन कर्णाटकभाषायाः, आंग्लमाध्यमेन वंगमहाराष्ट्रघूर्जरभाषाणां, एकेनैव मासेन अध्येतुं सौविध्यदायिमो ग्रन्थानाविष्कृत्य आसेतुशीतनगं परस्परभाषायाः नभिज्ञतामूलकं संकटं निवारयितुं सुरक्षां बध्नन्ति। आशास्महे एवमेव एकैकापि भाषा स्वेताभिः चतुर्दशभिर्भाषाभि प्रत्येकमवगमनाय ग्रन्थान् प्रकाशयेयुरेते इति, एतेषामुद्यमं च सर्वकारः सर्वलोकाः सर्वलोकेशश्च परिपोषयन्त्विवति।

**ति. कं. तिरुवेङ्कटाचार्यः,**
प्रधानमन्त्री.



## शालीयविद्यार्थिनां संग्रहार्थे

### (गूढलेखिनी)

#### कानिचित् कठिन वर्गमूलानि

√२ = १.४२; √७ = २.६५; √२० = ४.४४
√३ = १.७३; √८ = २.८३; √२२ = ४.७
√५ = २.२४; √१० = ३.१६; √२३ = ४.८
√६ = २.४५; √११ = ३.३२; √२४ = ४.९

### 'ज्या'याः अनुसारेण वर्तुल - क्षेत्रफलानि

| ज्या. सें. मी. | | क्षे. वर्ग सें. मी. | ज्या. | | क्षे. |
|---|---|---|---|---|---|
| ०.२ | .... | ०.१२५ | १.८ | .... | १०.० |
| ०.४ | .... | ०.५ | २.५२ | .... | २०.० |
| ०.५६५ | .... | १.० | २.८२ | .... | २५.० |
| ०.६३ | .... | १.२५ | ३.६ | .... | ४०.०० |
| ०.९ | .... | २.५ | १७.८७ | .... | १०००.० |
| १.१३ | .... | ४.० | १३.८२ | .... | ६०००.० |
| १.२६२ | .... | ५.० | | | |

---

## वन्दे संस्कृतमातरम्

**रचयिता श्री वैद्य रामस्वरूप शास्त्री,**

संपादकः, बालसंस्कृतम्, बम्बई ८६.

पठामि संस्कृतं नित्यं लिखामि संस्कृतं सदा ।
वदामि संस्कृतं नित्यं वन्दे संस्कृतमातरम् ।।

श्रृणोमि संस्कृतं नित्यं ध्यायामि संस्कृतं सदा ।
जानामि संस्कृतं सम्यक् वन्दे संस्कृतमातरम् ।।

संस्कृतस्य प्रतिष्ठायां नैजं सर्वं ददाम्यहम् ।
संस्कृतस्य प्रसादाय वन्दे संस्कृतमातरम् ।।

संस्कृतस्य कृते जीवन् संस्कृतस्य कृते यजन् ।
संस्कृतस्य सदा भक्तो वन्दे संस्कृतमातरम् ।।

संस्कृतस्य प्रचाराय सर्वत्र प्रसराय च ।
आत्मानमाहुतं मन्ये वन्दे संस्कृतमातरम् ।।



# आवश्यकसूचना

अयि भोः,

संस्कृतभाषाप्रचारिण्यास्सभायाः उत्तरायणपरीक्षाः आन्ध्र-प्रदेशकल्लोलकारणात् एप्रेलमासाय व्याक्षिष्यन्ते । एप्रेलमासे च तिथयः अद्यापि अनिश्चिता एव । निश्चयानुपदमेव प्राकाश्येरन् ।

विना विलंबशुल्कं जनवरि ३१ तिथिपर्यन्तं आवेदनपत्राणां तदनुबन्धिशुल्कस्य च स्वीकरणं, विलंबशुल्कसहितामां अवेदन-पत्राणां च पिब्रवरि १० तिथिपर्यन्तं स्वीकरणं च भविष्यति ।

उपाध्यायाः अभ्यर्थिनश्च एतत्सौविध्यं आत्महिताय उप-योजयन्त्विति प्रार्थयते ।

संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु.
१५-१-७३

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
*R. N. 1845/60.* *Postal R. H. No. 493.*
Licensed to Post without Prepayment. LICENCE NO. 57

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ४-००

## प्रहेलिका

रविसुतकृतगोकर्णः
श्रुतिविषयगुणाम्बरो वनात्मधरः ।
नरकशिरा जगदखिलं
चिरमव्यादसमरुक्पाणिः ॥

अर्थः— रविसुतः कर्णः, गोकर्णः चक्षुःश्रवाः सर्पः, तथा च कर्णयोः भूषणत्वेन धृतसर्प इत्यर्थः; श्रुतेः श्रवणस्य विषयो गुणः शब्दः यस्य आकाशः, सः अम्बरं वस्त्रं यस्य सः, व्योमाम्बर इत्यर्थः; वनं जलं, वनात्मा सलिलमयः चन्द्रः, तं धरतीति तथोक्तः; नरकः संघातनामकः, तथा च पंचशिरकत्वात् संघातशिराः, असमरुक् शूलरोग, तेन असमरुक्पाणिः शूलपाणिः शिवः, जगद् अखिलं चिरं अव्यात् ॥

Published by Sri N. Ramanatha Iyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500